॥ कौलोपनिषत् ॥

॥ श्रीः ॥

कौलोपनिषत् ।
शन्नः कौलिकः शन्नो वारुणी शन्नः शुद्धिः शन्नो।अग्निश्शन्नः सर्वं समभवत् । नमो ब्रह्मणे नमः पृथिव्यै नमोऽद्भ्यो नमोऽग्नये नमो वायवे नमो गुरुभ्यः ।
त्वमेव प्रत्यक्षं सैवासि ।
त्वामेव प्रत्यक्षं तां वदिष्यामि ।
ऋतं वदिष्यामि ।
सत्यं वदिष्यामि ।
तन्मामवतु ।
तद्वक्तारमवतु ।
अवतु माम् ।
अवतु वक्तारम् ।
ॐ शान्तिः शान्तिः शान्तिः ।
अथातो धर्मजिज्ञासा ।
ज्ञानं बुद्धिश्च ।
ज्ञानं मोक्षैककारणम् ।
मोक्षस्सर्वात्मतासिद्धिः ।
पञ्च विषयाः प्रपञ्चः ।
तेषां ज्ञानस्वरूपाः ।
योगो मोक्षः ।
अधर्मकारणाज्ञानमेव ज्ञानम् ।
प्रपञ्च ईश्वरः ।
अनित्यं नित्यम् ।
अज्ञानं ज्ञानम् ।
अधर्म एव धर्मः ।
एष मोक्षः ।
पञ्च बन्धा ज्ञानस्वरूपाः ।
पिण्डाज्जननम् ।
तत्रैव मोक्षः ।
एतज्ज्ञानम् ।
सर्वेन्द्रियाणां नयनं प्रधानम् ।
धर्मविरुद्धाः कार्य्याः ।
धर्मविहिता न कार्य्याः ।
सर्वं शाम्भवीरूपम् ।

आम्नाया न विद्यन्ते ।
गुरुरेकः ।
सर्वैक्यताबुद्धिमन्ते ।
आमन्त्रसिद्धेः ।
मदादिस्त्याज्यः ।
प्राकट्यं न कुर्य्यात् ।
न कुर्य्यात्पशुसम्भाषणम् ।
अन्यायो न्यायः ।
न गणयेत्कमपि ।
आत्मरहस्यं न वदेत् ।
शिष्याय वदेत् ।
अन्तः शाक्तः ।
बहिः शैवः ।
लोके वैष्णवः ।
अयमेवाचारः ।
आत्मज्ञानान्मोक्षः ।
लोकान्न निन्द्यात् ।
इत्यध्यात्मम् ।
व्रतं न चरेत् ।
न तिष्ठेन्नियमेन ।
नियमान्न मोक्षः ।
कौलप्रतिष्ठां न कुर्य्यात् ।
सर्वसमो भवेत् ।
स मुक्तो भवति ।
पठेदेतानि सूत्राणि प्रातरुत्थाय देशिकः ।
आज्ञासिद्धिर्भवेत्तस्य इत्याज्ञा पारमेश्वरी ।
यश्चाचारविहीनोऽपि यो वा पूजां न कुर्वते ।
यदि ज्येष्ठं न मन्येत नन्दते नन्दने वने ।
शन्नः कौलिकः ।
ॐ शान्तिः शान्तिः शान्तिः ।
॥ कौलोपनिषत्समाप्ता ॥

॥ इति कौलोपनिषत् ॥